न मौलाः कुशलारूप्याः सास्रवाधरगोचराः ।
अनास्रवेण हीयन्ते क्लेशाः सामन्तकेन च ॥ २१ ॥
अष्टौ सामन्तकान्येषां शुद्धादुःखासुखानि हि ।
आद्यं चाद्यं त्रिधा केचित्, अतर्कं ध्यानमन्तरम् ॥ २२ ॥
त्रिधाऽदुःखासुखं तच्च महाब्रह्मफलं च तत् ।
सवितर्कविचारोऽधः समाधिः परतोऽद्वयः ॥ २३ ॥
आनिमित्तः समाकारैः शून्यतानात्मशून्यतः ।
प्रवर्ततेऽप्रणिहितः सत्याकारैरतः परैः ॥ २४ ॥
शुद्धामलाः, निर्मलास्तु ते विमोक्षमुखत्रयम् ।
शून्यताशून्यताद्याख्यास्त्रयोऽपरसमाधयः ॥ २५ ॥
आलम्बेते अशैक्षं द्वौ शून्यता चाप्यनित्यतः ।
अनिमित्तानिमित्तस्तु शान्ततोऽसङ्ख्यया क्षमम् ॥ २६ ॥
सास्रवा नृष्वकोप्यस्य सप्तसामन्तवर्जिताः ।
समाधिभावना ध्यानं शुभामाद्यं सुखाय हि ॥ २७ ॥
दर्शनायाक्ष्यभिज्ञेष्टा धीभेदाय प्रयोगजाः ।
वज्रोपमोऽन्त्ये यो ध्याने सास्रवक्षमभावना ॥ २८ ॥
अप्रमाणानि चत्वारि व्यापादादिविपक्षतः ।
मैत्र्यद्वेषोऽपि करुणा मुदिता सुमनस्कता ॥ २९ ॥
उपेक्षा लोभ आकारः सुखिता दुःखिता वत ।
मोदन्तामिति सत्त्वाश्च कामसत्त्वास्तु गोचरः ॥ ३० ॥
ध्यानयोर्मुदितान्यानि षट्सु केचित् तु पञ्चसु ।
न तैः प्रहाणं नृष्वेव जन्यन्ते त्र्यन्वितो ध्रुवम् ॥ ३१ ॥
अष्टौ विमोक्षाः प्रथमावशुभा ध्यानयोर्द्वयोः ।
तृतीयोऽन्त्ये स चालोभः शुभारूप्याः समाहिताः ॥ ३२ ॥
निरोधस्तु समापत्तिः सूक्ष्मसूक्ष्मादनन्तरम् ।
स्वशुद्धकाधारार्येण व्युत्थानं चेतसा ततः ॥ ३३ ॥
कामाप्तदृश्यविषया प्रथमा ये त्वरूपिणः ।
तेऽन्वयज्ञानपक्षोर्ध्वस्वभूदुःखादिगोचराः ॥ ३४ ॥
अभिभ्वायतनान्यष्टौ द्वयमाद्यविमोक्षवत् ।
द्वे द्वितीयवदन्यानि पुनः शुभविमोक्षवत् ॥ ३५ ॥
दश कृत्स्नान्यलोभोऽष्टौ ध्यानेऽन्त्ये गोचरः पुनः ।
कामा द्वे शुद्धकारूप्ये स्वचतुःस्कन्धगोचरे ॥ ३६ ॥

निरोध उक्तो वैराग्यप्रयोगाप्तं तु शोषितम्।
त्रिधात्वाश्रयसारूप्यसंज्ञं शेषं मनुष्यजम् ॥ ३७ ॥

हेतुकर्मबलाद् धात्वोरारूप्योत्पादनं द्वयोः।
ध्यानानां रूपधातौ तु ताभ्यां धर्मतयापि च ॥ ३८ ॥

सद्धर्मो द्विविधः शास्तुरागमाधिगमात्मकः।
धातारस्तस्य वक्तारः प्रतिपत्तार एव च ॥ ३९ ॥

काश्मीरवैभाषिकनीतिसिद्धः
प्रायो मयायं कथितोऽभिधर्मः।
यद् दुर्गृहीतं तदिहास्मदागः
सद्धर्मनीतौ मुनयः प्रमाणम् ॥ ४० ॥

निमीलते शास्तरि लोकचक्षुषि
क्षयं गते साक्षिजने च भूयसा।
अदृष्टतत्त्वैर्निरवग्रहैः कृतं
कुतार्किकैः शासनमेतदाकुलम् ॥ ४१ ॥

गते हि शान्ति परमां स्वयम्भुवि
स्वयम्भुवः शासनधूर्धरेषु च।
जगत्यनाथे गुणघातिभिर्मलैः
निरङ्कुशं स्वैरमिहाद्य चर्यते ॥ ४२ ॥

एवं कण्ठगतप्राणं विदित्वा शासनं मुने।
बलकालं मलानां च न प्रमाद्यं मुमुक्षुभिः ॥ ४३ ॥

—:०:—

# ग्रन्थ-ग्रन्थकृतां सूची

मूले भाष्ये च व्याख्यायाम् आचार्याभ्यां स्मृता इह ।
ग्रन्था वा ग्रन्थकर्तारस्तेषां सूची प्रतायते ॥

